श्रीमद्

# रागकल्पद्रुमांकुरः

पं० अपातुलस्युपाख्यकाशीनाथप्रणीतः

स च

मुंबय्यां

विष्णुशर्मणा

निर्णयसागरयंत्रालये दा॰ रा॰ घाणेकरद्वारा मुद्राक्षरैरंकयित्वा
प्राकाश्यं नीतः कोलभाटवीथ्यां नं. २३

शके १८३३ सन १९११

श्रीमद्

# रागकल्पद्रुमांकुरः

पं० अपातुलस्युपाख्यकाशीनाथप्रणीतः

स च

मुंबय्यां

## विष्णुशर्मणा

निर्णयसागरयंत्रालये बा. रा. घाणेकरद्वारा मुद्राक्षरैरंकयित्वा
प्राकाश्यं नीतः कोलभाटवीथ्यां नं. २३

शके १८३३ सन १९११

श्रीगणेशाय नमः

# अथ श्रीमद्रागकल्पद्रुमांकुरः ।

हेरंबं गिरिजां शिवं रघुवरं नत्वा गुरून्मारुतिं
संश्रित्योत्तरदेशसंप्रचलितं संगीतमार्गं श्रुतम् ॥
वक्ष्ये भैरवरागतो ललितरागांतानहोरात्रगान्
वाद्यादिस्वरलक्षितांस्तु कतिचिद्रागान् क्रमेण स्फुटम् ॥ १ ॥
स्वस्तिश्रीवैद्यनाथार्हणपरपरळीक्षेत्रवासी द्विजाग्र्यो
राजारामः समासीत्तुलसिकुलभवस्तत्सुतो रामचंद्रः ॥
तत्पुत्रः काशिनाथो विबुधविरचितं लक्ष्यसंगीतशास्त्रं
भूयो भूयो विलोक्य प्रकटमिह परं रागतत्वं व्यनक्ति ॥ २ ॥
रागादिर्भैरवाख्यो मृदुऋषभमधस्तीव्रगांधारनिः स्या-
द्वाद्यस्मिन्धैवतोसावृषभ इह तु संवादिरूपोऽभिगीतः ॥
आरोहेऽल्पर्षभत्वं क्वचिदपि मृदुनिं प्राहुरेकेऽवरोहे
प्रातःकाले स नित्यं जगति सुमतिभिर्गीयते मंजुतानैः ॥ ३ ॥

इति भैरवः ॥

संभेदः किल भैरवस्य कथितो बंगालसंज्ञो बुधै-
रारोहेऽप्यवरोहणे च नियतं वर्ज्यो निषादस्वरः ॥
अन्यद्भैरवतुल्यमेव सकलं वक्रोऽवरोहे तु गो
गायंति प्रचुरं प्रभातसमये षड्भिः स्वरैर्गायकाः ॥ ४ ॥

इति बंगालभैरवः ॥

संस्थानकेऽस्मिन्यदि भैरवस्य
तीव्रो भवेद्धैवत एष नित्यम् ॥
पूर्णस्तदानीमिह षड्जवादी
ह्यानंदपूर्वोऽयमवादि भैरवः ॥ ५ ॥

इति आनंदभैरवः ॥

संस्थान एवाजनि भैरवस्य
मिश्रस्वरूपः शिवभैरवोऽसौ ॥
भेदस्त्वियान् भैरवतोऽस्य दृष्टो-
वरोहणे यन्निगयोर्मृदुत्वम् ॥ ६ ॥

इति शिवभैरवः ॥

संस्थाने किल भैरवस्य कथितो रागः प्रभाताभिधः
संपूर्णस्वरमंडितश्च ललितांगेन प्रयुक्तः सदा ॥
वादी मध्यम ईरितो मधुरसंवादी च षड्जस्वरो
गायंति ध्रुवमेनमत्र सुधियः प्रत्यूषकाले मुदा ॥ ७ ॥

इति प्रभातरागः ॥

सौराष्ट्रोऽयं भैरवस्यैव मेले
मांशः पूर्णो धैवतद्वंद्वयोगी ॥
आरोहे स्यात्तीव्रधोऽन्योऽवरोहे
प्रातर्गेयो दुर्बलोऽस्मिन्निषादः ॥ ८ ॥

इति सौराष्ट्रः ॥

रागो रामकली तु यत्र रिमधाः स्युः कोमला धैवतो
वादी रिस्तदमात्य ईरित इहारोहे मनी वर्जितौ ॥
संपूर्णं त्ववरोहणं निगदितं कैश्चिन्निषादद्वयं
प्रत्यूषे मधुरस्वरं सुमतयो गायंति यं गायकाः ॥ ९ ॥

इति रामकली ॥

गुणकली त्वियं मंद्रमध्यगा
गनिविवर्जिता भैरवांगिनी ॥
ऋषभधैवतौ मंत्रिवादिनौ
सदसि गीयते प्रातरौडुवा ॥ १० ॥

इति गुणकली ॥

पूर्वांगे किल भैरवः स्फुटतरं यत्रोत्तरांगे पुनः

स्पष्टं भाति हरप्रिया भवति तद्रूपं विचित्रं ततः ॥
वादित्वं त्विह षड्ज एव निहितं संवादिता पंचमे
द्वैरूप्येण हि गीयते सुमतिभी रागिण्यहीरी प्रगे ॥ ११ ॥

इति अहीरी ॥

आरोहे न निरिह गस्तु वर्ज्य एव
क्वाचित्को भवति च पंचमोऽवरोहे ॥
षड्जोंऽशो विलसति मध्यमश्च मंत्री
सा योगिन्युषसि चकास्ति भैरवांगे ॥ १२ ॥

इति जोगिया ॥

विभास इह वर्ज्यमध्यमनिषादकस्त्वौडुवो
रिकोमलधकोमलो भवति तीव्रगांधारकः ॥
अमात्य ऋषभस्वरो भवति धैवतोंऽशस्वरो
मनो हरति शृण्वतामुषसि पंचमन्यासतः ॥ १३ ॥

इति विभासः ॥

रागो वेलावली स्याद्यदि रिगधनयस्तीव्रकाः कोमलो मः
षड्जांशः कैश्चिदुक्तः प्रकृतिसुरुचिरो धैवतांशो गमंत्री ॥
आरोहेऽल्पौ मनी स्तः क्वचिदपि च निषादस्य वक्रत्वमुक्तं
प्रातःकाले सुवीणारवमधुरगलैः सुस्वरं गीयतेऽसौ ॥ १४ ॥

इति वेलावली ॥

मेले वेलावलीये प्रभवति रुचिरा शुक्लवेलावली य-
त्वारोहे दुर्बलो रिः क्वचिदपि च मृदुः स्यान्निषादोऽवरोहे ॥
वादित्वं मध्यमे स्यात्तदनु भवति संवादिता षड्ज एव
प्राह्णे गानं प्रदिष्टं सुनिपुणमतिभिर्मध्यमे न्यास इष्टः ॥ १५ ॥

इति शुक्लवेलावली ॥

मता यमनपूर्विका पुनरियं हि वेलावली
प्रविष्ट इह तीव्रमध्यम इति स्वरूपे भिदा ॥

सपावभिहितौ बुधैरिह तु वादिसंवादिनौ
मनोज्ञमधुरस्वरैरुषसि गीयते सांप्रतम् ॥ १६ ॥

इति यमनवेलावली ॥

वेलावली स्यान्नटपूर्विकाऽपि
श्रुतिप्रिया मध्यमवाद्यलंकृता ॥
आरोहणे यत्र नटो विभाति
प्रगीयते प्रातरियं सुधीभिः ॥ १७ ॥

इति नटवेलावली ॥

वेलावलीमेलभवो हि देव-
गिरिर्विलोमे धगदुर्बलोऽयम् ॥
संपूर्णरागः किल षड्जवादी
कल्याणमिश्रोऽभिमतः प्रभाते ॥ १८ ॥

इति देवगिरिः ॥

वेलावलीरागभवस्त्वल्हैया
संवादिगांधारकवादिधैवतः ॥
मृदुर्निषादोऽपि मतोऽत्र किंचि-
दारोहणे मध्यमवर्जितोऽयम् ॥ १९ ॥

इत्यल्हैया ॥

विभाति सरपर्दकः सकलमान्यतीव्रस्वरै-
र्विलावलविशेष एव स इह प्रदिष्टो बुधैः ॥
सपावथ धगौ च कैश्चिदिह वादिसंवादिनौ
स्मृतावुषसि गीयते सुमधुरस्वरं गायकैः ॥ २० ॥

इति सरपर्दा ॥

देशीकारस्त्वौडुवः शुद्धमेलः
प्रोक्तो नित्यं वर्जितोऽसौ मनिभ्याम् ॥
गः संवादी धैवतस्त्वत्र वादी
पन्यासोऽयं गीयते प्रातरेव ॥ २१ ॥

इति देशीकारः ॥

वेलावल्या मेल एव प्रसिद्धो
लच्छासागो धैवतांशो गमंत्री ॥
खंमाजांगेनैव यस्य प्रचारो
नित्यं प्राह्णे गीयतेऽसौ सुधीभिः ॥ २२ ॥

इति लच्छासागः ॥

वेलावल्याः प्रभेदः ककुभ इति मतो मान्यतीव्रस्वराढ्यः
संवादी चर्षभोऽस्मिन् विलसति नितरां पंचमो वादिपीठे ॥
संमिश्रो जैजवंत्याभवदिति सुधियो यद्वदंति ध्रुवं तद्
गायंति प्रातरेव प्रतिदिवसममुं गानशास्त्रप्रवीणाः ॥ २३ ॥

इति ककुभः ॥

माडो रागो भवति मरुमेवाडदेशप्रसिद्धः
संपूर्णोऽयं परमरुचिरो मान्यतीव्रस्वरोत्थः ॥
प्रायो वक्रक्रम इह सपौ वादिसंवादिनौ स्तः
प्रारोहे दुर्बलधरिषभो गीयते सर्वकाले ॥ २४ ॥

इति माडरागः ॥

आभांत्यस्यां रिगमधनयः कोमलाः सोऽत्र वादी
मः संवादी क्वचिदपि धगौ वादिसंवादिनौ स्तः ॥
प्रातःकालेऽतिरुचिरतरा स्वैरिणी सर्वरम्या
संपूर्णा संजनयति मुदं भैरवी रागिणीऽयम् ॥ २५ ॥

इति भैरवी ॥

यस्यां तीव्रो भवति रिषभः कोमला एव सर्वे
वादी यस्यां विलसति सदा मध्यमः सोऽस्त्यमात्यः ॥
एके प्राहुर्मृदुलमृषभं चावरोहे कदाचित्
प्रातर्गेया परममधुरा भैरवी सिंधुपूर्वा ॥ २६ ॥

इति सिंधुभैरवी ॥

भूपालः स्याद्भैरवीमेलजन्यो

नित्यं यस्मिन्वर्ज्यते मश्च निश्च ॥
गः संवादी धैवतोऽस्त्यत्र वादी
प्रातः काले गीयते मंजुकंठैः ॥ २७ ॥

इति भूपालः ॥

सामंतोऽखिलकोमलस्वरयुतस्त्वारोहणे वर्जितो
गांधारेण निषादकेन च तथा त्यक्तोऽवरोहे निना ॥
वादी मध्यम एव षड्ज इह संवादी भवेन्निश्चितं
प्रातर्नित्यमसौ सुशिक्षितजनैर्मंजुस्वरं गीयते ॥ २८ ॥

इति सामंतः ॥

तोडीयं यदि कोमला धगरयस्तीव्रौ मनी धैवतो
वादिस्थानगतः सदा विजयते गांधारसंवादिना ॥
आरोहे ऋषभस्य दुर्बलतया षड्ग्रहन्यासतो
गंभीरप्रकृतिर्विलंबितलयं संगीयते संगवे ॥ २९ ॥

इति तोडी ॥

तोडिकैव किल गुर्जरी मता
पंचमेन रहिता यदा भवेत् ॥
संवदृषभधैवतांशतो
गीयते सुमतिभिस्तु संगवे ॥ ३० ॥

इति गुर्जरी ॥

तोडीमेले कोमलो मध्यमोऽयं
किंचित्कैश्चिद्गीयते संप्रविष्टः ॥
लाचारीं तां तोडिकां धैवतांशां
प्राहुः सर्वे गीतशास्त्रप्रवीणाः ॥ ३१ ॥

इति लाचारी ॥

रागिण्यासावरीयं मृदुगमधनिभिस्तीव्रकेणर्षभेण
संयुक्तारोहणे या किल गनिरहिता चावरोहे तु पूर्णा ॥

वादी स्याद्धैवतोऽस्यां श्रुतिरुचिरतरो गिश्च संवाद्यभीष्टो
विष्वक्तानप्रसारैर्मृदुमधुरगलैर्गीयते संगवे सा ॥ ३२ ॥
इत्यासावरी ॥

प्रख्याता जौनपूरी मृदुगमधनिका रोहणे गेन हीना
संपूर्णा चावरोहे नियतमभिहितश्चात्र वादी निषादः ॥
गांधारः स्यादमात्यः प्रकटयति सदाऽऽसावरीतुल्यरूपं
गानं चास्या द्वितीयप्रहरसमुचितं प्राज्ञ एवोपदिष्टम् ॥ ३३ ॥
इति जौनपूरी ॥

स्वरैसावर्याः किल जगति देशी सुविदिता
धगत्यक्ताऽऽरोहे विलसति वरोहे तु सकला ॥
प्रसिद्धः संवादो भवति समयोरत्र मधुरः
प्रभां सारंगस्य प्रकटयति पूर्वेऽग इह सा ॥ ३४ ॥
इति देशी ॥

आसावर्याः स्वरेभ्यः प्रभवति रुचिरो देवगांधाररागः
प्रारोहे वर्ज्यतोक्ता ध्रुवमिह रिधयोः पूर्णता चावरोहे ॥
पूर्वांगे सा धनाश्रीः प्रविलसति सदाऽऽसावरी चोत्तरांगे
संवादी पंचमोंऽशः स इह सुमधुरं गीयते संगवे हि ॥ ३५ ॥
इति देवगांधारः ॥

आसावर्याः स्वरेभ्यो ध्रुवमजनि खटो मिश्ररागोऽयमुक्तो
धांशो गांधारमंत्री प्रकृतिचपलको मग्रहः पंचमांतः ॥
पूर्वांगे भैरवोऽस्य प्रविलसति सदाऽऽसावरी चोत्तरांगे
गायंत्येनं हि सर्वे सुकुशलमतयः संगवे श्राव्यकंठाः ॥ ३६ ॥
इति खटरागः ॥

हरप्रियामेलसमुद्भवोऽयं
देशाख्यरागो धगदुर्बलः स्यात् ॥
वाद्यत्र षड्जः सहचारिमध्यमः
सारंगभंग्या कुतुपेऽभिगीयते ॥ ३७ ॥
इति देशाख्यः ॥

सूहारागः किल गमनिभिः कोमलैर्भाति युक्तः
प्रारोहे धैवतविरहितश्चावरोहे तथैव ॥
वादी मध्यः प्रविलसति संवादकः षड्ड एव
चंचत्तानैः कुतुपसमये गीयते गानधुर्यैः ॥ ३८ ॥

इति सूहारागः ॥

सुघ्राई स्यान्मृदुगमनिकारोहणे धैवतेन
हीनेत्युक्ता पुनरभिहिता चावरोहे धयुक्ता ॥
संवादी तु प्रथित इह सः पंचमोऽस्त्यत्र वादी
विष्वक्तानैः कुतुपसमये गीयते गीतविद्भिः ॥ ३९ ॥

इति सुघ्राईरागः ॥

सारंगो धगवर्जितो मृदुमनिस्तीव्रर्षभः पंचमः
संवादी किल वाद्यपीह ऋषभोऽसौ मध्यमादिर्मतः ॥
आरोहे यदि धो भवेदिह तदा शुद्धोऽवरोहे तु धे
वृंदावन्यपि तीव्रनिर्भवति वै गेयस्तु मध्येऽहनि ॥ ४० ॥

इति सारंगः ॥

रागोऽयं बडहंसको मृदुमनिर्गांधारहीनः सदा
वादी त्वत्र हि पंचमो भवति संवादी च षड्जस्वरः ॥
सारंगस्य हि भेद एष इति यं सर्वे वदंति ध्रुवं
मध्याह्ने मधुरं च गीतिनिपुणैः षड्भिः स्वरैर्गीयते ॥ ४१ ॥

इति बडहंसः ॥

सारंगो गौडपूर्वो द्विम इति विदितोऽन्यैस्तु तीव्रैरुपैतः
प्रायः सर्वोऽपि वक्रो निरतिविरल एवात्र संदृश्यतेऽसौ ॥
गांधारो धैवतश्च प्रविलसत उभौ वादिसंवादिरूपौ
केऽप्याहुर्वैपरीत्यं समयविद उतार्धात्परं गीयतेऽन्हः ॥ ४२ ॥

इति गौडसारंगः ॥

प्रोक्तेयं पटमंजरी गमनिभिर्युक्ता सदा कोमलै-

रारोहे धगदुर्बला निगदिता पूर्णाऽवरोहे पुनः ॥
वादी स्यादिह षड्ज एव किल संवादी मतः पंचमो
मध्याह्नात्परमेव सुस्वरमसौ संगीयते गायकैः ॥ ४३ ॥

इति पटमंजरी ॥

स्वरास्तु मृदवोऽखिला ऋषभधौ च नारोहणे-
वरोहसमये भवेयुरथ यत्र सर्वेऽपि च ॥
समुल्लसति पंचमोंऽश इह षड्जसंवादिना-
पराह्णसमयेषु निग्रहयुता धनाश्रीरियम् ॥ ४४ ॥

इति धनाश्रीः ॥

प्रोक्ता भीमपलाशिका गमनिभिर्या कोमलैर्मंडिता
प्रारोहे रिधवर्जिता प्रकथिता पूर्णाऽवरोहे पुनः ॥
वादी मध्यम ईरितो भवति संवादी तु षड्जस्वरो
यामे चेह तृतीयकेऽहनि बुधैर्गीता मनोज्ञस्वरैः ॥ ४५ ॥

इति भीमपलाशिका ॥

हरप्रियामेलभवापवादिनी
रिधौ परित्यज्य समारुहंती ॥
पूर्णावरोहा किल हंसकंकणी
द्विगा तृतीयप्रहरेऽह्नि गीयते ॥ ४६ ॥

इति हंसकंकणी ॥

यस्यां तीव्रौ मनी स्तः खलु ऋषभधगाः कोमला भांति यत्र
प्रख्यातः पंचमोंऽशः स्फुरति सहचरोऽप्यत्र षड्जोऽभिगीतः ॥
आरोहे वर्जितौ तौ भवत इह रिधौ स्युश्च सर्वेऽवरोहे
प्रायः कालेऽपराह्णे सुचतुरमतिभिर्गीयते मूलतानी ॥ ४७ ॥

इति मूलतानी ॥

मतः पीलूरागः सकलमृदुतीव्रस्वरयुतो
मृदुर्गांधारोंऽशः सहचरति तीव्रस्तु निरिह ॥

प्रसिद्धः सर्वत्र प्रचुरतरसंचाररुचिरः
सदा गेयः सर्वार्भकतरुणवृद्धैः परिचितः ॥ ४८ ॥

इति पीलुः ॥

द्वौ गौ द्वौ धौ द्वौ च नी कोमलौ म-
स्तीव्रो यस्मिंश्चर्षभो भाति पूर्णः ॥
वादी रिः संवादिना पंचमेन
बर्वारागो गीयते सर्वकालम् ॥ ४९ ॥

इति बरवारागः ॥

रागेऽस्मिन्मारुसंज्ञे किल गमधनयस्तीव्रकाः स्युर्मृदूरि-
र्वादी चात्रर्षभोऽयं ध्रुवमनुभवतो लक्ष्ययोगानुरोधात् ॥
संवादी धैवतश्च स्फुटमिह गमनं साध्यतेऽतिश्रमेण
संगीताभ्यासशीलैर्नियतमविरतं गीयते सायमेव ॥ ५० ॥

इति मारुः ॥

मालीगौरः परमरुचिरो मारुसंस्थानजन्यः
संपूर्णोऽसाविह किल रिधौ वादिसंवादिनौ स्तः ॥
श्रीसंमिश्रो विलसति सदा पूरियामिश्रितश्च
सायंगीतो मधुरनिनदैर्मन्द्रमध्यप्रचारः ॥ ५१ ॥

इति मालीगौरः ॥

वराटीति रागः स्मृतो मारुमेले
गवादी धसंवादियुक्तो विभाति ॥
सदा पंचमेनाभियुक्तः सुपूर्णः
स सायं बुधैर्गीयते मंजुगीतैः ॥ ५२ ॥

इति वराटी ॥

जैत्रो रागो मारुसंस्थानजन्यः
प्रोक्तो नित्यं वर्जितोऽयं मनिभ्याम् ॥

वादी चास्मिन्पंचमः संप्रदिष्टः
षड्जोऽमात्यो गीयते सायमेव ॥ ५३ ॥
इति जैत्रः ॥

प्रख्याता मालवश्रीः सगमपनियुता धर्षभाभ्यां विहीना
प्रारोहे चावरोहेऽप्यमृदुगमनिका भ्राजते सौडुवैव ॥
प्रोक्तोऽस्यां पंचमोंऽशः प्रविलसति च संवादिरूपस्तु षड्जः
षड्जोद्ग्राहा सदेयं सुरुचिरमतिभिर्गीयते सायमेव ॥ ५४ ॥
इति मालवश्रीः ॥

पूर्वीरागः सकलविदितः कोमलाभ्यां रिधाभ्यां
मध्यस्तीव्रो मृदुरपि सदैवात्र तीव्रौ गनी स्तः ॥
गो वाद्यत्र प्रविलसति तत्साहचर्ये निषादः
संपूर्णोऽसौ सरसविबुधैः सायमेव प्रगीतः ॥ ५५ ॥
इति पूर्वी ॥

पूर्वीस्वरैरेव युता त्रिवेणी
सदा विहीना खलु मध्यमेन ॥
वादी मतोऽस्यामृषभोऽस्त्यमात्यो-
भिगीयते पंचम एव सायम् ॥ ५६ ॥
इति त्रिवेणी ॥

पूर्वीमेले संस्थिता सा तु टंकी
संपूर्णाऽसौ पंचमांशा प्रसिद्धा ॥
संवाद्यस्यां प्रोच्यते चर्षभोऽयं
सायंकाले गीयते गीत्यभिज्ञैः ॥ ५७ ॥
इति टंकी ॥

पूर्वीपूर्यामिश्रिता साजगीरी
गांधारांशा पूर्णरोहावरोहा ॥
ईषच्छुद्धो मध्यमो धैवतौ द्वौ
प्रोक्तौ यस्यां गीयते सायमेव ॥ ५८ ॥
इति साजगिरी ॥

पूर्वीमेले भाति वर्ज्या मनिभ्यां
षड्जांशा वा गांशिका कैश्चिदुक्ता ॥
संवाद्यस्यां पंचमः संप्रदिष्टः
सेयं रेवा सायमेवाभिगीता ॥ ५९ ॥

इति रेवा ॥

पूर्वीसंस्थानजन्याऽखिलविबुधमता मालवी रागिणीयं
प्रारोहे निर्निषादा भवति विकलिता धैवतेनावरोहे ॥
वादी यत्रर्षभः संप्रविलसति तथा पंचमोऽमात्य इष्टः
संगत्या गस्य पस्याप्यतिरुचिरतरा गीयते सायमेव ॥ ६० ॥

इति मालवी ॥

जैत्रश्रीरिह वर्णिता गमनयस्तीव्रा मृदू धर्षभा-
वारोहे रिधवर्जिता पुनरियं पूर्णावरोहे मता ॥
गांधारस्य निषादकस्य च सदा संवादसंभूषिता
गीतालापविचारचारुमतिभिः सायं मुदा गीयते ॥ ६१ ॥

इति जैत्रश्रीः ॥

उक्ता पूर्याधनाश्रीरमृदुगमनिका कोमलौ धर्षभौ च
बिभ्राणा पंचमांशा ऋषभसहचरी पूर्णरोहावरोहा ॥
योगं पूर्वीधनाश्रीत्यभिहितविलसद्रागयोर्यद्दधाति
नाम्ना रागद्वयं संप्रकटयति बुधैर्गीयतेऽसौ दिनांते ॥ ६२ ॥

इति पूर्व्याधनाश्रीः ॥

श्रीरागः कथितोऽत्र तीव्रनिगमोऽस्मिन्कोमलौ धर्षभौ
वादी पंचम ईरितो मधुरसंवादी मतश्चर्षभः ॥
आरोहे तु धगौ न संस्पृशति संपूर्णोऽवरोहे सदा
गीतोऽवश्यमसौ दिनांत्यसमये संभुक्तिमुक्तिप्रदः ॥ ६३ ॥

इति श्रीरागः ॥

गौरीरागः प्रकटतरमाभाति तुल्यः श्रियैव
भेदः किंचिद्भवति च परं वादिसंवादितोऽस्य ॥

वादी चात्रर्षभ इति जगुः पंचमोऽमात्यवर्यः
सायं गीतः सुखयति मनो मंद्रनी रक्तिदोऽस्मिन् ॥ ६४ ॥

इति गौरी ॥

मेले पूर्व्या दीपकः षड्जवादी
प्रारोहे संवर्ज्यतेऽत्रर्षभो हि ॥
वर्ज्यः प्रोक्तश्चावरोहे निषादः
सायंकाले गीयते गानधुर्यैः ॥ ६५ ॥

इति दीपकः ॥

कल्याणो यमनो विभाति सकलैस्तीव्रैः स्वरैर्मंडितो
गांधारः कथितोऽत्र वाद्यथ च संवादी निषादस्वरः ॥
शेषाः स्युस्त्वनुवादिनः क्वचिदिह स्यात्कोमलो मध्यमो
गेयो रात्रिमुखे मनीषिभिरसौ संपूर्णरागो मतः ॥ ६६ ॥

इति यमनकल्याणः ॥

कल्याणः शुद्धपूर्वः किल सरिगपधैस्तीव्रकैरौडुवोऽय-
मारोहेऽथावरोहे निधपमगरिसैस्तीव्रकैरेव पूर्णः ॥
वादी गांधार एवात्र भवति सह संवादिना धैवतेन
गेयोऽसौ पूर्वयामे निशि सकलबुधैर्मंद्रमध्यस्वरेषु ॥ ६७ ॥

इति शुद्धकल्याणः ॥

भूपाली नाम रागस्त्विह सरिगपधैः पंचतीव्रस्वरैः स्या-
दारोहे चावरोहेऽपि च स खलु पुनर्नैव भेदं प्रपेदे ॥
गांधारो धैवतोऽत्र प्रविलसत उभौ वादिसंवादिनौ तौ
प्रख्यातश्चौडुवोऽयं निशि गुणिनिकरैर्गीयते पूर्वयामे ॥ ६८ ॥

इति भूपाली ॥

हंमीरः परिपूर्णराग इह गांधारग्रहो धांशकः
केचित्पांशमिमं जगुः कतिपरे षड्ग्रहांशं विदुः ॥
आरोहे रिनिदुर्बलो निगदितो वक्रोऽवरोहे गतो
रात्र्याद्यप्रहरे द्विमध्यमलसत्तीव्रस्वरैर्गीयते ॥ ६९ ॥

इति हंमीरः ॥

श्यामो रागो भवति विलसन्मद्वयश्चान्यतीव्रः
प्रारोहे धैवतविरहितः षड्जवादी तथाऽस्मिन् ॥
संवादी च प्रकृतिरुचिरो मध्यमः संप्रदिष्टः
पूर्वे यामे सरसमतिभिर्गीयतेऽसौ निशायाम् ॥ ७० ॥

इति श्यामः ॥

कामोदो भाति युक्तः किलरिगधनिभिस्तीव्रकैर्मद्वयेन
वादी चात्र प्रसिद्धः प्रविलसति सदा पंचमो रिस्त्वमात्यः ॥
स्तोकोऽमुष्मिन्निषादः प्रकटयति रुचिं वक्रगश्चावरोहे
सानंदं पूर्वयामे निशि विबुधजनैर्गीयते मंजुकंठैः ॥ ७१ ॥

इति कामोदः ॥

हेमः कल्याणभेदोऽस्त्यनतिपरिचितो मान्यतीव्रस्वरोऽसौ
संपूर्णः षड्जवादी ह्यनिरपि गदितो मंत्रिणा पंचमेन ॥
आरोहे वर्ज्यते धः सरसरुचिकरो मंद्रमध्यस्वरेषु
सर्वेषां रक्तिदोऽयं प्रथमनिशि सदा गीयते गीत्यभिज्ञैः ॥ ७२

इति हेमकल्याणः ॥

तीव्रस्वरैरिह विभाति स चंद्रकांतः
प्रारोहणे मरहितः सकलोऽवरोहे ॥
गांधारवाद्ययममात्यनिषादयुक्तः
कल्याणभेद इति गीतिविदो वदंति ॥ ७३ ॥

इति चंद्रकांतः ॥

प्रख्यातो नटराग एष मृदुमस्तीव्रस्वरैर्मेतरै-
रारोहे परिपूर्णताऽस्य धगयोस्त्यागोऽवरोहे मतः ॥
वादी दीव्यति मध्यमो लसति संवादी तु षड्जस्वरो
धीमद्भिः प्रहरात्परं सुमधुरं रात्रावसौ गीयते ॥ ७४ ॥

इति नटरागः ॥

छायानाटः प्रकृतिरुचिरः पंचमांशो न्यमात्यो
मद्वंद्वी चामृदुरिगधनिः पंचमाद्रौ प्रपाती ॥

आरोहे संस्पृशति च न निं योऽवरोहे गवक्रः
पूर्वे यामे निशि सुमतिभिर्गीयते चारुगीतैः ॥ ७५ ॥

इति छायानाटः ॥

केदारस्त्वभिवर्णितो रिगनिधैस्तीव्रैः सदाऽलंकृतो
वादी कोमलमध्यमो भवति संवादी च षड्जस्वरः ॥
तीव्रोऽपि क्वचिदत्र मध्यम इहारोहे रिगौ वर्जितौ
यामे च प्रथमे निशासु मधुरं वीणारवैर्गीयते ॥ ७६ ॥

इति केदारः ॥

केदारस्य प्रभेदो विलसति मलुहा मेतरैः सर्वतीव्रैः
संयुक्तो मध्यमांशः सहजरुचिरसंवादिषड्जाभिरामः ॥
आरोहे प्रायशोसावृषभधरहितः श्यामकामोदमिश्रो
गीतः पूर्वे हि यामे निशि कुशलजनैर्मंद्रमोद्ग्राहपूर्वम् ॥ ७७ ॥

इति मलुहा ॥

केदारेऽस्मिंस्तीव्रमस्य प्रयोगो
भूयान् स्तोकं कोमलो निर्यदि स्यात् ॥
हंमीरांगं दृश्यते यत्र किंचि-
त्तं केदारं चांदनीपूर्वमाहुः ॥ ७८ ॥

इति चांदनीकेदारः ॥

पूरिया तु षाडवा रिकोमलान्यतीव्रका
मंद्रमध्यचारिणी सुरक्तिदा पवर्जिता ॥
मंदगामिनी मता गवादिनी निसंवदा
स्निग्धमंजुलस्वरैर्निशासु गीयते बुधैः ॥ ७९ ॥

इति पूरिया ॥

विहंग इह गीयते ममृदुरन्यतीव्रस्वरो
रिधौ त्यजति रोहणे स्पृशति चावरोहे पुनः ॥
तथा निगदितौ गनी रुचिरवादिसंवादिनौ
निशीथसमये सदा श्रुतिमनोहरं गीयते ॥ ८० ॥

इति विहंगः ॥

प्रसिद्ध इह शंकरो भवति षाडवो वर्ज्यमः
सपावभिमतौ सदा मधुरवादिसंवादिनौ ॥
परैस्तु रिमवर्जितः कथित औडुवोऽपि क्वचि-
न्निशीथसमयेऽभिगीत इह चारुतीव्रस्वरैः ॥ ८१ ॥

इति शंकरः ॥

खंमाजो यत्र तीव्रा ऋषभगधनयो मो मृदुर्निर्मृदुः स्या-
दारोहे रिर्निषिद्धो भवति च परिपूर्णोऽवरोहे पवक्रः ॥
वादी गांधार एव प्रविलसति तथा संवदानो निषादो
रात्रौ यामे द्वितीये प्रमदयति मनः श्रोतृणामेष रागः ॥ ८२॥

इति खंमाजः ॥

खंबावती मृदुमनी रिगधैश्च तीव्रै-
र्युक्तार्षभेण नियतं रहितावरोहे ॥
गांशा निषादसहचारिसमाश्रिता च
गायंति तां किल निशि प्रहरे द्वितीये ॥ ८३ ॥

इति खंबावती ॥

रागेश्वर्यपि पंचमेन रहिता खंमाजसंस्थानजा
प्रारोहे ऋषभं न संस्पृशति धो वक्रोऽवरोहे मतः ॥
षड्जो वाद्यथ मध्यमेन सततं संवादिना रोचते
यामिन्यां प्रहरात्परं सुमतिभिर्मंजुस्वरं गीयते ॥ ८४ ॥

इति रागेश्वरी ॥

खंमाजसंस्थानभवास्ति दुर्गा
नित्यं परिभ्यां परिवर्जितेयम् ॥
गांशा धसंवादिविराजमाना
द्वितीययामे निशि गीयमाना ॥ ८५ ॥

इति दुर्गा ॥

तिलंग इह वर्णितो मृदुमनिस्तथा तीव्रगः
सदैव रिधवर्जितो भवति गांशकश्चौडुवः ॥

निषाद इह संवदत्यथ च नीपयोः संगति-
र्निशि प्रहरतः परं समभिगीयते गायनैः ॥ ८६ ॥

इति तिलंगः ॥

झिंझूटीत्येष रागः सकलजनमतः कोमलाभ्यां मनिभ्या-
मन्ये तीव्राः प्रयुक्ताः क्वचिदपि मृदुगस्तीव्रनिश्चापि गेयः ॥
वादी गांधार उक्तः श्रुतिरुचिरतरो धैवतः संप्रवादी
प्रारोहेऽल्पौ निगौ स्तो निशि मधुरगलैर्मंद्रमध्याभिगीतः ॥ ८७ ॥

इति झिंझूटी ॥

पाहाडिका भवति मेतरसर्वतीव्रा
मन्यल्पका सततसंश्रितमंद्रमध्या ॥
वादी तु षड्ज इह पंचमसंत्रियुक्तः
संगीयते सुचतुरैः खलु सर्वदाऽसौ ॥ ८८ ॥

इति पाहाडिका ॥

यदा तु रिगधाः स्वरा निगदिताश्च तीव्रास्तथा
मृदुर्भवति मध्यमो विलसतो निषादावुभौ ॥
मतावृषभधैवतौ सरसवादिसंवादिनौ
धगौ न यदि रोहणे निशि तदा मता सोरटी ॥८९॥

इति सोरटी ॥

रागो देसः पंचमांशोर्यमात्यः
संपूर्णोऽयं सोरटी तुल्य एव ॥
किंचिद्भेदाच्चावरोहे रिवक्रो
रात्रौ यामादुत्तरं गीयतेऽसौ ॥ ९० ॥

इति देसरागः ॥

प्रोक्तेयं जयजयवंतिका तु पूर्णा
गौ नी द्वावपि मृदुमो रिधौ च तीव्रौ ॥
वादी रिर्विलसति पंचमोहि मंत्री
सोरठ्यंगत इह गीयते निशायाम् ॥ ९१ ॥

इति जयजयवंती ॥

कामोदस्तिलकादिरत्र मृदुमस्तीव्रेतरः सांशकः
संवादी किल पंचमो मत इहारोहे च धो वर्जितः ॥
सोरव्यंगयुतोऽवरोहमृदुनिर्वक्रर्षभालंकृतः
सानंदं निशि गीयते सुमतिभिर्यामात् परं सुस्वरम् ॥ ९२ ॥

इति तिलककामोदः ॥

रागो मल्लारसंज्ञः सरिमपधइतिप्रोक्तपंचस्वराढ्य-
स्तीव्रावस्मिन् रिधौ स्तो भवति सहचरः पंचमः सोऽत्र वादी ॥
यद्रागाकालगानोद्भवदुरितमयं हंति तस्मादवश्यं
गेयो वर्षासु नित्यं भुवि सकलजनैरौडुवः कल्मषघ्नः ॥ ९३ ॥

इति मल्लारः ॥

मल्लारमेले यदि कोमलो निः
क्वचित्तु तीव्रोऽपि च संप्रयुक्तः ॥
षड्जांशमेवेह वदंति सर्वे
तं मेघमल्लारमिति स्वरज्ञाः ॥ ९४ ॥

इति मेघमल्लारः ॥

मल्लारो यः सूरपूर्वोऽभिगीतो
द्वावत्र प्रच्छादनीयौ धगौ स्तः ॥
षड्जो वादी मध्यमः संप्रवादी
रागाभिज्ञैर्गीयते प्रावृषीह ॥ ९५ ॥

इति सुरमल्लारः ॥

मीयामल्लार इति विदितो यस्तु कर्णाटमिश्रः
षड्जो वादी रुचिर इह संवादिना पंचमेन ॥
गांधारस्य स्फुटविलसदांदोलनं निद्वयं च
प्रच्छन्नो धो विलसति सदा मध्यमाद्रौ प्रपातः ॥ ९६ ॥

इति मीयामल्लारः ॥

संपूर्णोऽयं गौंडमल्लाररागो
न्यल्पारोहस्तीव्रमान्यस्वरो यः ॥

मांशः संवादी तु षड्जो मतोऽस्मिन्
गायंति ज्ञाः प्रावृषि प्रायशोऽमुम् ॥ ९७ ॥

इति गौंडमल्लारः ॥

काफीरागोस्त्यमृदुलरिधः कोमलाभ्यां गमाभ्यां
द्वाभ्यां निभ्यां परममधुरः पंचमो वादिरूपः ॥
संवादी स्यात्स इह कतिचिद्वादिनं गं वदंति
सांद्रस्निग्धं सरसमतिभिर्गीयतेऽसौ निशायाम् ॥ ९८ ॥

इति काफी ॥

काफीमेले सिंधुरोऽस्ति प्रसिद्धः
प्रारोहे गांधारवर्ज्योऽवरोहे ॥
पूर्णः षड्जो वाद्यमात्यः प एव
प्रेक्षावद्भिर्गीयते सर्वकालम् ॥ ९९ ॥

इति सिंधुरः ॥

धानी प्रोक्ता मृदुगमनिका वर्जिता धर्षभाभ्या-
मारोहेऽस्याः सगमपनयः स्युस्त एवावरोहे ॥
वादी गांधार इह निसखः प्रोच्यते ह्यौडुवेयं
चंचच्चारुस्वरसुरुचिरं गीयते सर्वकालम् ॥ १०० ॥

इति धानी ॥

नीलांबर्यपि कोमलैर्गमनिभिर्युक्ता क्वचित्तीव्रगा
सोद्ग्राहोत्तमवादिपंचमयुता स्यात्षड्जसंवादिका ॥
आरोहे धविवर्जिता निगदिता पूर्णाऽवरोहे पुन-
श्चारूद्गानधुरंधरैः सुमतिभिः सा गीयते सर्वदा ॥ १०१ ॥

इति नीलांबरी ॥

गारारागो भवति मृदुमस्तीव्ररिस्तीव्रधश्च
द्वौ गांधारौ विलसत इह द्वौ निषादौ तथैव ॥
तीव्रावारोहण इतरके कोमलौ तौ गनी स्तः
षड्जो वादी परमरुचिरो गीयते सर्वकालम् ॥ १०२ ॥

इति गारारागः ॥

प्रोक्तः कर्णाटरागो मृदुगमधनिको मंद्रमध्यस्वरस्थो
वादी तीव्रर्षभोऽत्र श्रवणमधुरसंवादिना पंचमेन ॥
आरोहे दुर्बलो गः प्रविलसति सदांदोलनं गे प्रयुक्तं
धो वर्ज्यश्चावरोहे सुरुचिरगमकैर्गीयते प्राङ्निशीथात् ॥ १०३

इति कर्णाटकः ॥

कर्णाटसंस्थानभवो हि नायकी
संवादिपड्जः खलु मध्यमांशः ॥
प्रोक्तः सदा धैवतवर्जितो वै
द्वितीययामे निशि गीयतेऽसौ ॥ १०४ ॥

इति नायकी ॥

हुसेनी च कर्णाटकस्यैव भेदो
भवेत्तारषड्जांशको मोद्रहश्च ॥
युतः पंचमेनैव संवादिनाऽयं
प्रयुक्तो निशायां द्वितीये हि यामे ॥ १०५ ॥

इति हुसेनी ॥

कौशी च कर्णाटकभेद एव
संपूर्णरागः खलु मध्यमांशः ॥
मिश्रस्तु किंचित्स हि मालकौशिना
निशीथकाले मधुरं प्रगीयते ॥ १०६ ॥

इति कौशी ॥

रागोऽड्डाणः प्रसिद्धो मृदुनिगमयुतस्तीव्रधस्तीव्ररिश्च
तारः षड्जोऽत्र वादी सहचरति सदा पंचमो मध्यसंस्थः ॥
आरोहे दुर्बलौ तौ भवत इह धगौ धं मृदुं केचिदाहुः
कर्णाटस्यैव भेदः सरससुमधुरं गीयतेऽसौ निशीथे ॥ १०७॥

इत्यड्डाणः ॥

सहानारागोऽयं मृदुगमनिकस्तीव्रधरिको
न धः स्यादारोहे विलसति विलोमे तु स मनाक् ॥

समाम्नातः पांशो भवति सहकारी तु स इह
स्फुरत्तानैर्गीतो जनयति निशीथे मुदमसौ ॥ १०८ ॥

इति सहाना ॥

तीव्रौ रिधौ गमनयो मृदवो हि यस्यां
संवादिषड्जसहिता खलु मध्यमांशा ॥
आरोहणे परहिता सकलाऽवरोहे
वागीश्वरी सुमतिभिः कथितार्धरात्रे ॥ १०९ ॥

इति वागीश्वरी ॥

बहाररागो निगमैस्तु कोमलै-
रस्मिन्समौ संवदतः परस्परम् ॥
आरोहणे रिर्न न धोऽवरोहणे
ऋतौ वसंते मधुरं स गीयते ॥ ११० ॥

इति बहाररागः ॥

रागाग्र्यो मालकौशिर्मृदुलगमधनिः प्रौढपंचस्वराढ्यो
गंभीरोच्चस्वभावस्त्यजति स ऋषभं पंचमं चापि नित्यम् ॥
वाद्यस्मिन्मध्यमः संप्रविलसति भृशं षड्जसंवादियुक्तः
प्रख्यातस्त्वौडुवोऽयं प्रकटयति रुचिं यो निशीथात्परस्तात् ॥१११॥

इति मालकौशिः ॥

हिंदोलोऽसावौडुवः सर्वतीव्रो
नित्यं हीनः पंचमेनर्षभेण ॥
वादी गांधारस्वरो धैवतः सं-
वादी गेयः सर्वकालं वसंते ॥ ११२ ॥

इति हिंदोलः ॥

वसंततौ गेयो मृदुलऋषभस्तीव्रसकलः
पहीनो मद्वंद्वः समगपुनरावृत्तिरुचिरः ॥
सवादी मामात्योऽप्यहनि निशि चाव्याहतगतिः
स्थितस्तारे षड्जे स जगति वसंतो विजयते ॥ ११३ ॥

इति वसंतः ॥

मेलाद्वासंतिकाद्वै प्रभवति रुचिरो भट्टिहारोऽपि रागः
संपूर्णो मध्यमांशः परममधुरसंवादिषड्जस्वरो हि ॥
मिश्रा यस्मिन् त्रयोऽमी परजललितकालिंगका इत्थमूचू
रात्रौ यामे तृतीये सुकुशलमतिभिर्गीयते मंजुतानैः ॥११४॥

इति भट्टिहारः ॥

भंखाररागस्तु वसंतमेले
संपूर्णरूपः खलु पंचमांशः ॥
द्विमध्यमोऽसौ मृदुलर्षभश्च
रात्रौ तृतीये प्रहरेऽभिगीयते ॥ ११५ ॥

इति भंखारः ॥

रागः पंचम एष सर्वविदितो युक्तो वसंतस्वरैः
वादी मध्यम एव यत्र विलसत्संवादिषड्जो मतः ॥
आरोहे ऋषभं न संस्पृशति यो घर्ज्यर्षभोऽपि क्वचि-
द्रात्रावंतिमयामके सुमतिभिर्मंजुस्वरं गीयते ॥ ११६ ॥

इति पंचमरागः ॥

रागोऽयं परजाभिधो निगदितः पूर्णो बहूनां मते
तीव्रौ यत्र गनी मृदू किल रिधौ तीव्रो मृदुर्मध्यमः ॥
तारः षड्ज इहांश इत्यभिहितः स्यात्पंचमोऽमात्यको
रात्रावंतिमयाम एव सुखदो विद्वद्भिर्गीयते ॥ ११७ ॥

इति परजः ॥

यत्र स्यादृषभो मृदुर्निधमगास्तीव्राः स्वराः पंचमो
वर्ज्यः स्यादथ मध्यमो निगदितः क्वापि क्वचित्कोमलः ॥
वादी धैवत उच्यते सहचरो गांधारकः कथ्यते
रात्र्यामंतिमयामके सुमधुरं सा गीयते सोहनी ॥ ११८ ॥

इति सोहनी ॥

रागः प्रोक्तः कलिंगो मृदुरिमधयुतस्तीव्रगांधारनिः स्या-
द्वादी गांधारकोऽस्मिन्सरलगतिरसौ धैवतो मंत्रिवर्यः ॥

पूर्णारोहावरोहः प्रकृतिसुरुचिरः सर्वलोकप्रसिद्ध-
स्तुर्ये यामे निशायां सकलबुधवरैर्गीयते मंजुतानैः ॥११९॥

इति कलिंगः ॥

असौ ललितपंचमो भवति भैरवस्य स्वरै-
र्द्विमध्यमविभूषितः परहितः सदारोहणे ॥
मतोंऽश इह मध्यमः सरसषड्जसंवादिना
निशाचरमयाम एव ललितांगतो गीयते ॥ १२० ॥

इति ललितपंचमः ॥

भैरवस्य मेल एव मेघरंजनी मता
पंचमेन धैवतेन वर्जिता सदौडुवा ॥
षड्जमंत्रिणी समीरिता च वादिमध्यमा
गीयते विलंबितं बुधैर्निशांत्ययामके ॥ १२१ ॥

इति मेघरंजनी ॥

गीतांतेऽसौ भवति ललितः कोमलेनर्षभेण
युक्तस्तीव्रैस्तुगमधनिभिः कोमलेनापि मेन ॥
मांशः षड्जोऽत्र तु सहचरः पंचमो वर्ज्यतेऽस्मि-
स्तुर्ये यामे निशि सुमतिभिर्गीयते मंगलार्हः ॥ १२२ ॥

इति ललितः ॥

काशीनाथतुलस्यपाविरचितः कल्पद्रुमांकूरको
विंशत्युत्तरमुख्यरागशतसच्छ्लोकैः समालंकृतः ॥
रामाग्निद्विपभूविरोधकृति यश्चैत्र्यां समापूरितः
सोयं पुष्पफलैः समृद्धिमुपयात्वस्मिन्जगन्मंडले ॥ १२३ ॥
एवं रागाद्यनंता रघुवरनृपतेः सद्गुणा अप्यनंता
गातुं ज्ञातुं च सर्वान्दशशतवदनः स्यादनंतो न शक्तः ॥
गेयं सर्वैस्तथापि स्वमतिपरिमितं सद्यशो राघवस्य
योगाद्यागाद्विरागात्प्रियमधिकतया रामचंद्रस्य गानम् ॥ १२४ ॥

॥ श्रीरामचंद्रार्पणमस्तु ॥